गोपालसहस्रनाम, गोपालस्तवराजः, महालक्ष्मीस्तोत्रम्, राधिकाष्टोत्तरशतनामस्तोत्रम्, राधिकामंत्रश्च.

# अथ
# गोपालसहस्रनाम
## प्रारंभः।

श्रीगणेशायनमः ॥ ॥ कैलासशिखरे रम्ये गौरी पृच्छति शंकरं ॥ ॥ पार्वत्युवाच ॥ ब्रह्मांडाखिलनाथस्त्वंसृष्टिसंहारकारकः ॥१॥ त्वमेव पूज्यसे लोकैर्ब्रह्मविष्णुसुरादिभिः॥ नित्यं पठसि देवेश कस्य स्तोत्रं महेश्वर ॥ २ ॥ आश्चर्यमिदम[1]त्यंतं जायते म[2]म शंकर ॥ तत्प्राणेश महाप्राज्ञ संशयं छिंधि शंकर[3] ॥ ३ ॥ श्रीमहादेव उवाच ॥ धन्यासि कृतपुण्यासि पार्वति प्राणवल्लभे ॥ रहस्यातिरहस्यं च यत्पृच्छसि वरानने ॥ ४ ॥ स्त्रीस्वभावान्महादेवि पुनस्त्वं परिपृच्छसि ॥ गोपनीयं गोपनीयं गोपनीयं प्रयत्नतः ॥ ५ ॥ दत्ते च सिद्धिहानिः स्यात्तस्माद्यत्नेन गोपयेत् ॥ इदं रहस्यं

१ आख्यानं इति पाठः । २ मयि इ० पाठः । ३ मे प्रभो । इ० पा०

परमं पुरुषार्थप्रदायकम् ॥६॥ धनरत्नौघमाणिक्यतुरंगमग
जादिकम् ॥ ददाति स्मरणादेव महामोक्षप्रदायकम् ॥७॥
तत्तेहं संप्रवक्ष्यामि शृणुष्वावहिता प्रिये ॥ योऽसौ निरंजनो
देवश्चित्स्वरूपी जनार्दनः ॥८॥ संसारसागरोत्तारकारणाय
सदा नृणाम् ॥ श्रीरंगादिकरूपेण त्रैलोक्यं व्याप्य तिष्ठति
॥९॥ततो लोका महामूढा विष्णुभक्तिविवर्जिताः ॥ निश्चयं
नाधिगच्छंति पुनर्नारायणो हरिः॥१०॥निरंजनो निराकारो
भक्तानां प्रीतिकामदः ॥ वृंदावनविहाराय गोपालं रूपमुद्व
हन् ॥ ११ ॥ मुरलीवादनाधारी राधायै प्रीतिमावहन् ॥ अं
शांशेभ्यः समुन्मील्य पूर्णरूपकलायुतः ॥ १२ ॥ श्रीकृष्ण

चंद्रो भगवान्नंदगोपवरोद्यतः ॥ धरणीरूपिणी मातृयशोदानं[1] ददायकः[2] ॥ १३ ॥ द्वाभ्यां प्रयाचितो नाथो देवक्यां वसुदेवतः॥ ब्राह्मणाभ्यर्थितो[3] देवो देवैरपि सुरेश्वरि॥१४॥जातोऽवन्यांमुकुंदोऽपि[4] मुरली वेदरेचिका[5] ॥ तया सार्द्धं वचःकृत्वा ततो जातो महीतले॥१५॥ संसारसारसर्वस्वं श्यामलं महदुज्ज्वलम् ॥ एतज्ज्योतिरहंवेद्यं[6] चिंतयामि सनातनम् ॥१६॥ गौरतेजो विना यस्तु श्यामतेजःसमर्चयेत् ॥ जपेद्वा ध्यायते वापि स भवेत्पातकी शिवे ॥ १७ ॥ स ब्रह्महा सुरापश्च स्वर्णस्तेयी च पंचमः ॥ एतैर्दोषैर्विलिप्येत तेजोभेदान्महे

---

१ माता । २ दायिनी । ३ प्रार्थितः । ४ अवन्यापि च नुतः । ५ वेदान्रेचयति सृजतीति वेदरेचिका । ६ वंद्यं ।

श्वरि ॥ १८ ॥ तस्माज्ज्योतिरभूद्द्वेधा राधामाधवरूपकम् ॥ तस्मादिदं महादेवि गोपालेनैव भाषितम् ॥ १९ ॥ दुर्वाससो मुनेर्मोहे कार्तिक्यां रासमंडले ॥ ततः पृष्टवती राधा संदेहं भेदमात्मनः ॥ २० ॥ निरंजनात्समुत्पन्नं मयाधीतं जगन्मयि ॥ श्रीकृष्णेन ततः प्रोक्तं राधायै नारदाय च ॥ २१ ॥ ततो नारदतः सर्वं विरला वैष्णवास्तथा ॥ कलौ जानंति देवेशि गोपनीयं प्रयत्नतः ॥ २२ ॥ शठाय कृपणायाथ दांभिकाय सुरेश्वरि ॥ ब्रह्महत्यामवाप्नोति तस्माद्यत्नेन गोपयेत् ॥ २३ ॥ ॐअस्य श्रीगोपालसहस्रनामस्तोत्रमंत्रस्य श्रीनारदऋषिः ॥ अनुष्टुप्छन्दः ॥ श्रीगोपालोदेवता ॥ कामोबीजं ॥ मायाशक्तिः ॥ चंद्रःकीलकम् ॥ श्रीकृष्णचंद्रभ

क्तिरूपफलप्राप्तयेश्रीगोपालसहस्रनामजपेविनियोगः ॥ ॥

अथवा ॥ ॥ ॐऐंक्लींबीजं ॥ श्रींह्रींशक्तिः ॥ श्रीवृंदावननिवासः कीलकं ॥ श्रीराधाप्रियंपरंब्रह्मेतिमंत्रः ॥ धर्मादिचतुर्विधपुरुषार्थसिद्धयर्थेंजपेविनियोगः ॥ ॐनारदऋषये नमः शिरसि ॥ अनुष्टुप्छंदसेनमः मुखे॥श्रीगोपालोदेवतायैनमः हृदये॥ क्लींकीलकायनमःनाभौ ॥ ह्रींशक्तयेनमःगुह्ये ॥ श्रीं कीलकाय नमः पादयोः॥ क्लींकृष्णायगोविन्दायगोपीजनवल्लभायस्वाहा ॥ इतिमूलमन्त्रःॐक्लांअंगुष्ठाभ्यांनमः ॥ ॐक्लींतर्जनी० ॥ ॐक्लूंमध्यमा० ॥ ॐक्लैंअनामिका० ॥ ॐक्लौंकानिष्टि० ॥ ॐक्लःकरतलकरपृष्ठाभ्यांनमः ॥ ॐक्लांहृद

पा० १ जन्य० । २ पाठे ।

यायन० ॥ ॐक्लींशिरसेस्वाहा ॥ ॐक्लूंशिखायैव० ॥ ॐक्लै
कवचायहुं ॥ ॐक्लौंनेत्रत्रयायवौ० ॥ ॐक्लः अस्त्रायफट् ॥ अ
थमूलमंत्रन्यासः ॥ क्लींअङ्गुष्ठाभ्यांनमः ॥ कृष्णायतर्जनीभ्यां
नमः ॥ गोविन्दायमध्यमाभ्यांनमः ॥ गोपीजनअनामिकाभ्यां
नमः ॥ वल्लभायकनिष्ठिकाभ्यांनमः ॥ स्वाहाकरतलकरपृ
ष्ठाभ्यांनमः ॥ इतिकरन्यासः ॥ अथहृदयादिन्यासः ॥ क्लींहृ
दयायनमः ॥ कृष्णायशिरसेस्वाहा ॥ गोविन्दायशिखायैव
षट् ॥ गोपीजनकवचायहुं ॥ वल्लभायनेत्रत्रयायवौषट् ॥ स्वा
हाअस्त्रायफट् ॥ इतिहृदयादिन्यासः ॥ अथ ध्यानम् ॥ ॐ
कस्तूरीतिलकं ललाटपटले वक्षस्थले कौस्तुभं नासाग्रे वर
मौक्तिकं करतले वेणुं करे कंकणम् ॥ सर्वांगेहरिचंदनं सुललि

तं कण्ठे च मुक्तावलिं गोपस्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः ॥ १ ॥ फुल्लेंदीवरकांतिमिंदुवदनं बर्हावतंसप्रियं श्रीवत्सांकमुदारकौस्तुभधरं पीतांबरं सुंदरम् ॥ गोपीनां नयनोत्पलार्चिततनुं गोगोपसंघावृतं गोविंदं कलवेणुवादनपरं दिव्यांगभूषं भजे ॥ २ ॥ इतिध्यानम् ॥ ॐ॥ श्रीगोपालो महीपालः सर्ववेदांतपारगः ॥ कृष्णः* कमलपत्राक्षः पुंडरीकः सनातनः ॥१॥ गोपतिर्भूपतिः शास्ता १० प्रहर्ता विश्वतोमुखः॥ आदिकर्ता महाकर्ता महाकालः प्रतापवान् ॥ २ ॥ जगज्जीवो जगद्धाता जगद्भर्ता जगद्वसुः २० मत्स्यो भीमः कुहूभर्ता हर्ता वाराहमूर्तिमान् ॥ ३ ॥ नारायणो हृषीकेशो

---

पा०-- * वेदवेदाङ्गपारगः । * धरणीपालकोधन्यः ।

गोविंदो गरुडध्वजः ॥ गोकुलेंद्रो ३० महाचंद्रः शर्वरी प्रियकारकः ॥ ४ ॥ कमलामुखलोलाक्षः पुंडरीकः शुभाव हः ॥ दुर्वासाः कपिलो भौमः सिंधुसागरसंगमः ॥ ५ ॥ गोविं दो ४० गोपतिर्गोत्रः कालिंदीप्रेमपूरकः ॥ गोपस्वामी गोकु लेंद्रो गोवर्धनवरप्रदः ॥ ६ ॥ नंदादिगोकुलत्राता दाता दारि द्र्यभंजनः ॥ सर्वमंगलदाता ५० च सर्वकामप्रदायकः ॥ ७ ॥ आदिकर्ता महीभर्ता सर्वसागरसिंधुजः ॥ गजगामी गजोद्धा री कामी कामकलानिधिः ॥ ८ ॥ कलंकरहितश्चंद्रो ६० बिंबास्यो बिंबसत्तमः ॥ मालाकारः कृपाकारः कोकिलास्वर

---

पा०—* महीचन्द्रः । * दूर्वाशः । गोत्रम् । * मालाकारः कृपाकारः । * कोकिलस्वरभूषणः ।

भूषणः ॥ ९ ॥ रामोनीलांबरो देवो हली दुर्दममर्दनः ॥ सह
स्राक्षपूरीभेत्ता ७० महामारीविनाशनः ॥१०॥ शिवः शिव
तमो भेत्ता बलारातिप्रपूजकः ॥ कुमारीवरदायी च वरेण्यो
मीनकेतनः ॥ ११ ॥ नरो नारायणो ८० धीरो राधापतिरुदा
रधीः॥श्रीपतिः श्रीनिधिः श्रीमान्मापतिः प्रतिराज*हा ॥१२॥
वृंदापतिः कुलं९० ग्रामी धा*मी ब्रह्म सनातनः ॥ रेवतीरमणो
रामश्चं*चलश्चारुलोचनः ॥१३॥ रामायणशरीरोयं रामी १००
रामः श्रियःपतिः॥शर्वरः शर्वरी *शर्वःसर्वत्रशुभदायकः॥१४॥
रा*धाराधयिताऽ राधी राधाचित्तप्रमोदकः ॥ राधारतिसुखो
पेतो ११० राधामोहनतत्परः ॥ १५ ॥ राधावशीकरो रा

पा०—*पतिराजहा ।*धाम ।*प्रियश्चंचललोचनः।* सर्वः ।*राधाराधायितः ।

धात्हृदयांभोजषट्पदः ॥ राधालिंगनसंमोहो राधानर्तनकौतुकः ॥ १६ ॥ राधासंजातसंप्रीती राधाकामफलप्रदः ॥ वृंदापतिः कोशनिधिः कोकशोकविनाशकः १२० ॥ १७॥ चंद्रापतिश्चंद्रपतिश्चंडकोदंडभंजनः ॥ रामो दाशरथी रामो भृगुवंशसमुद्भवः ॥ १८ ॥ आत्मारामो जितक्रोधो मोहो १३० मोहांधभंजनः ॥ वृषभानुभवो भावः काश्यपिः करुणानिधिः ॥ १९ ॥ कोलाहलो हली हाली हेली हलधरप्रियः १४० ॥ राधामुखाब्जमार्तंडो भास्करो रविजो विधुः ॥ २० ॥ विधिर्विधाता वरुणो वारुणो वारुणीप्रियः ॥ रो

---

पा०--*राधालिङ्गलसंमोदः । *राधासंगतिसंप्रीतो । *राधाकाम्यफलप्रदः * कोकनिधिः । * विनाशनः । * हालः ।

हिणीहृदयानंदी १५० वसुदेवात्मजो बलिः ॥ २१ ॥ नीलां
बरो रौहिणेयो जरासंधवधोऽमलः ॥ नागो *नवांभो विरुदो
*वीरहा १६० वरदो बली ॥२२॥ गोपथो विजयी विद्वाञ्छि
पिविष्टः सनातनः ॥ पर्शुरामवचोग्राही वरग्राही शृगालहा
१७० ॥ २३ ॥ दमघोषोपदेष्टा च रथग्राही सुदर्शनः ॥
वीरपत्नीयशस्त्राता जराव्याधिविघातकः ॥ २४ ॥ द्वारका
वासतत्त्वज्ञो हुताशनवरप्रदः ॥ यमुनावेगसंहारी नीलांबरध
रः प्रभुः १८० ॥२५॥ विभुः शरासनो धन्वी गणेशो गणनाय
कः ॥ लक्ष्मणो लक्षणो लक्ष्यो रक्षोवंशविनाशनः ॥२६॥ वाम
नो १९० वामनीभूतो *वमनो वमनारुहः ॥ यशोदानंदनः कर्त्ता

पा०— * नवांभः । * विरुहः ।

 

यमलार्जुनमुक्तिदः ॥ २७ ॥ उलूखली महामानी दामबद्धाह्वयी शमी २०० ॥ भक्तानुकारी भगवान् केशवोऽचलधारकः ॥ २८ ॥ केशिहा मधुहा मोही वृषासुरविघातकः ॥ अघासुरविनाशी च पूतनामोक्षदायकः २१० ॥२९॥ कुब्जाविनोदी भगवान् कंसमृत्युर्महामखी ॥ अश्वमेधो वाजपेयो गोमेधो नरमेधवान् ॥ ३० ॥ कंदर्पकोटिलावण्यश्चंद्रकोटिसुशीतलः २२० रविकोटिप्रतीकाशो वायुकोटिमहाबलः ॥३१॥ ब्रह्मा ब्रह्मांडकर्ता च कमलावांछितप्रदः ॥ कमली कमलाक्षश्च कमलामुखलोलुपः ॥३२॥ कमलाव्रतधारी च कमलाभः* २३० पुरंदरः ॥ सौभा

---

पा०-- * वामनो वामनारुहः ।

ग्याधिकचित्तोऽयं महामायी महोत्कटः ॥३३॥ तारकारिः सुरत्राता मारीचक्षोभकारकः ॥ विश्वामित्रप्रियो दांतो रामो २४० राजीवलोचनः ॥ ३४ ॥ लंकाधिपकुलध्वंसी विभीषणवरप्रदः ॥ सीतानंदकरो रामो वीरो वारिधिवंधनः ॥ ३५ ॥ खरदूषणसंहारी साकेतपुरवासनः ॥ चंद्रावलीपतिः २५० कूलः केशिकंसवधोऽमरः ॥ ३६ ॥ माधवो मधुहा माध्वी माध्वीको माधवीविभुः ॥ मुंजाटवीगाहमानो धेनुकारि २६० धरात्मजः ॥ ३७ ॥ वंशीवटविहारी च गोवर्धनवनाश्रयः ॥ तथा तालवनोद्देशी भांडीरवनशंखहा ॥ ३८ ॥ तृणावर्तकथाकारी वृषभानुसुतापतिः ॥ राधाप्राणसमो राधा

पा०—* कमलाक्षः । * संकेतपुरवासनः । * माधवो मधुः । * कृपाकारी ।

वदनाब्जमधुव्रतः ॥ ३९ ॥ गोपीरंजनदेवज्ञो २७० लीलाकमलपूजितः॥ क्रीडाकमलसंदोहो गोपिकाप्रीतिरंजनः॥४०॥ रंजको रंजनो रंगी रंगी रंगमहीरुहः ॥ कामः कामारिभक्तोऽयं २८० पुराणपुरुषः कविः ॥ ४१ ॥ नारदो देवलो भीमो बालो बालमुखांबुजः ॥ अंबुजो ब्रह्म साक्षी २९० च योगी दत्तवरो मुनिः॥४२॥ऋषभः पर्वतो ग्रामो नदीपवनवल्लभः॥ पद्मनाभः सुरज्येष्ठो ब्रह्मा ३०० रुद्रोऽहिभूषितः ॥ ४३ ॥ गणानां त्राणकर्त्ता च गणेशो ग्रहिलो ग्रही ॥ गणाश्रयो गणाध्यक्षः क्रोडीकृतजगत्त्रयः ॥४४॥ यादवेंद्रो३१० द्वारकेंद्रो मथुरावल्लभो धुरी ॥ भ्रमरः कुंतली कुंतीसुतरक्षी महाम ॥ ४५ ॥ यमुनावरदाता च काश्यपस्य वरप्रदः ॥

शंख*चूडवधोद्दामो ३२० गोपीरक्षणतत्परः ॥ ४६ ॥ पांचजन्यकरो रामी त्रिरामी वनजो जयः ॥ फाल्गुनः फाल्गुन*सखो विराधवधकारकः ॥ ४७ ॥ रुक्मिणीप्राणनाथश्च ३३० सत्यभामाप्रियंकरः ॥ कल्पवृक्षो महावृक्षो दानवृक्षो महाफलः ॥ ४८ ॥ अंकुशो भूसुरो भामो भामको भ्रामको ३४० हरिः ॥ सरलः शाश्वतो वीरो यदुवंशी शिवात्मकः ॥ ४९ ॥ प्रद्युम्नो बलकर्ता च प्रहर्ता दैत्यहा ३५० प्रभुः ॥ महाधनो महावीरो वनमालाविभूषणः ॥ ५० ॥ तुलसीदामशोभाढ्यो जालंधरविनाशनः ॥ शूरः सूर्यो मृक*ण्डश्च भास्करो ३६० विश्वपूजितः ॥ ५१ ॥ रविस्तमोहा वह्निश्च वाडवो

---

पा०—* शंखचूडवधो दामी । * फल्गुनसखा । * ऽमृताण्डश्च ।

वडवानलः ॥ दैत्यदर्पविनाशी च गरुडो गरुडाग्रजः ॥९२॥
गोपीनाथो ३७० महीनाथो वृंदानाथोऽ*वरोधकः ॥ प्रपंची पंचरूपश्च लता गुल्मश्च गोपतिः ॥ ९३ ॥ गंगा च यमुनारूपो ३८० गोदा वेत्रवती तथा ॥ कावेरी नर्मदा तापी गंडकी सरयू रजः ॥ ९४ ॥ राजसस्तामसः ३९० सत्त्वी सर्वांगी सर्वलोचनः ॥ सुधामयोऽमृतमयो योगिनीवल्लभः शिवः ॥९५॥ बुद्धो बुद्धिमतांश्रेष्ठो विष्णु ४०० जिष्णुः शचीपतिः ॥ वंशी वंशधरो लोको विलोको मोहनाशनः ॥ ९६ ॥ रवरावो रवो रावो ४१० बलो बालो बलाहकः ॥ शिवो रुद्रो नलो नीलो लांगुली लांगुलाश्रयः ॥९७॥ पारदः ४२०

---

पा०--* विरोधकः ।

पावनो हंसो हंसारूढो जगत्पतिः ॥ मोहिनीमोहनो मायी
महामायो महामखी ॥ ५८ ॥ वृषो वृषाकपिः ४३० कालः
कालीदमनकारकः ॥ कुब्जाभाग्यप्रदो वीरो रजकक्षय
कारकः ॥ ५९ ॥ कोमलो वारुणो राजा जलजो जल
धारकः ४४० ॥ हारकः सर्वपापघ्नः परमेष्ठी पितामहः ॥६०॥
खड्गधारी कृपाकारी राधारमणसुंदरः ॥ द्वादशारण्यसंभोगी
शेषनागफणालयः ॥ ६१ ॥ कामः ४५० श्यामः सुखश्रीदः
श्रीपतिः श्रीनिधिः कृतिः ॥ हरिर्हरो नरो नारो नरोत्तम ४६०
इषुप्रियः ॥ ६२ ॥ गोपालीचित्तहर्ता च कर्ता संसारता
रकः ॥ आदिदेवो महादेवो गौरीगुरुरनाश्रयः ॥ ६३ ॥ सा
धुर्मधु ४७० विधुर्धाता भ्राताऽक्रूरपरायणः ॥ रोलंबी च

हयग्रीवो वानरारिर्वनाश्रयः ॥ ६४ ॥ वनं वनी ४८० वना
ध्यक्षो महावंद्यो महामुनिः ॥ स्यमंतकमणिप्राज्ञो विज्ञो वि
घ्नविघातकः ॥ ६५ ॥ गोवर्द्धनो वर्द्धनीयो वर्द्धनीवर्द्धनाप्रियः ॥
वर्द्धन्यो ४९० वर्द्धनो वर्द्धी *वार्द्धिन्यः सुमुखप्रियः ॥ ६६ ॥
वर्द्धितो वृद्धको वृद्धो वृंदारकजनप्रियः ॥ गोपालरमणीभर्ता
सांबकुष्ठविनाशनः ५०० ॥ ६७ ॥ रुक्मिणीहरणः प्रेमप्रेमी
चंद्रावलीपतिः ॥ श्रीकर्ता विश्वभर्ता च नरो नारायणो ब
ली ॥ ६८ ॥ गणो गणपति ५१० श्चैव दत्तात्रेयो
महामुनिः ॥ व्यासो नारायणो दिव्यो भव्यो भावुकधारकः
॥ ६९ ॥ श्वः*श्रेयसं शिवं भद्रं ५२० भावुकं भविकं शुभं

---

पा०—* वर्द्धिष्णुः सुमुखः प्रियः । पा०--*स्वःश्रेयःशं ।

म् ॥शुंभात्मकः शुंभः शास्ता प्रशास्ता मेघनादहा॥७०॥ब्र
ह्मण्यदेवो दीनानामुद्धारकरणक्षमः ५३०॥कृष्णः कमलपत्रा
क्षः कृष्णः कमललोचनः ॥७१॥ कृष्णः कामी सदाकृष्णः स
मस्तप्रियकारकः॥नंदो नंदी ५४०महानंदी मादी मादनकः
किली॥७२॥मिली हिली गिली गोली गोलो गोलालयो५५०
गुली॥गुग्गुली मारकी शाखी वटः पिप्पलकः कृती ॥ ७३ ॥
म्लेच्छहा कालहर्ता च यशोदायश एव च ५६०॥ अच्युतः
केशवो विष्णुर्हरिः सत्यो जनार्दनः ॥ ७४॥ हंसो नारायणो
लीलो *नीलो ५७० भक्तिपरायणः ॥ जानकीवल्लभो रामो
विरामो विघ्ननाशनः ॥ ७५ ॥ सहस्रांशुर्महाभानुर्वीरबाहु

पा०-- * लीनः ।

महोदधिः ॥ समुद्रो ५८० ऽब्धिरकूपारः पारावारः सरित्पतिः ॥ ७६ ॥ गोकुलानंदकारी च प्रतिज्ञापरिपालकः ॥ सदारामः कृपारामो महारामो धनुर्धरः ५९० ॥ ७७ ॥ पर्वतः पर्वताकारो गयो गेयो द्विजप्रियः ॥ कंबलाश्वतरो रामो रामायणप्रवर्तकः ॥७८॥ द्यौर्दिवो ६०० दिवसो दिव्यो भव्यो भाविभयापहः ॥ पार्वतीभाग्यसहितो भ्राता लक्ष्मीविलासवान् ॥ ७९ ॥ विलासी साहसी सर्वी ६१० गर्वी गर्वितलोचनः ॥ मुरारिर्लोकधर्मज्ञो जीवनो जीवनांतकः ॥८०॥ यमो यमादिर्यमनो यामी ६२० यामविधायकः ॥ वंसुली पांसु

---

पा०— * कमलाश्वतरः । * भर्ता । * यमारिः । * वंशुलीपांशुलीपांसुः ।

ली पांसुः पांडुरर्जुनवल्लभः ॥ ८१ ॥ ललिताचंद्रिकामाला
माली मालांबुजाश्रयः ॥ अंबुजाक्षो ६३० महायक्षो दक्ष
श्चिंतामणिप्रभुः ॥ ८२ ॥ मणिर्दिनमणिश्चैव केदारो बदरी
श्रयः ॥ बदरीवनसंप्रीतो व्यासः सत्यवतीसुतः ६४०॥८३॥
अमरारिनिहंता च सुधासिंधुविधूदयः ॥ चंद्रो रविः शिवः शू
ली चक्री चैव गदाधरः॥८४॥श्रीकर्ता श्रीपतिः६५० श्रीदः
श्रीदेवो देवकीसुतः ॥ श्रीपतिः पुंडरीकाक्षः पद्मनाभो
जगत्पतिः ॥ ८५ ॥ वासुदेवोऽप्रमेयात्मा केशवो ६६०
गरुडध्वजः ॥ नारायणः परंधाम देवदेवो महेश्वरः ॥ ८६ ॥
चक्रपाणिः कलापूर्णो वेदवेद्यो दयानिधिः ॥ भगवा ६७०
न्सर्वभूतेशो गोपालः सर्वपालकः ॥ ८७ ॥ अनंतो नि

गुणोऽनंतो निर्विकल्पो निरंजनः ॥ निराधारो निराकारो ६८० निराभासो निराश्रयः ॥ ८८ ॥ पुरुषः प्रणवातीतो मुकुंदः परमेश्वरः ॥ क्षणावनिः सार्वभौमो वैकुंठो भक्तवत्सलः ६९० ॥ ८९ ॥ विष्णुर्दामोदरः कृष्णो माधवो मथुरापतिः ॥ देवकीगर्भसंभूतो यशोदावत्सलो हरिः ॥ ९० ॥ शिवः संकर्षणः ७०० शंभुर्भूतनाथो दिवस्पतिः ॥ अव्ययः सर्वधर्मज्ञो निर्मलो निरुपद्रवः ॥९१॥ निर्वाणनायको नित्यो नीलजीमूतसंनिभः ७१० ॥ कलाक्षयश्च सर्वज्ञः कमलारूपतत्परः ॥ ९२ ॥ हृषीकेशः पीतवासा वसुदेवप्रियात्मजः ॥ नंदगोपकुमारार्यो नवनीताशनः प्रभुः* ॥ ९३ ॥

---

पा०—* विभुः ।

पुराणपुरुषः ७२० श्रेष्ठः शंखपाणिः सुविक्रमः ॥ अनिरु
द्धश्चक्ररथः शार्ङ्गपाणिश्चतुर्भुजः ॥ ९४ ॥ गदाधरः सुरार्ति
घ्नो गोविंदो ७३० नंदकायुधः ॥ वृंदावनचरः शौरिर्वेणुवाद्य
विशारदः ॥ ९५ ॥ तृणावर्तांतको भीमसाहसो बहुविक्रमः ॥
शकटासुरसंहारी बकासुरविनाशनः ॥ ९६ ॥ धेनुका
सुरसंघातः ७४० पूतनारिर्नृकेसरी ॥ पितामहो गुरुः
साक्षी प्रत्यगात्मा सदाशिवः ॥ ९७ ॥ अप्रमेय
प्रभुः प्राज्ञाप्रतर्क्यः स्वप्नवर्द्धनः ७५० ॥ धन्यो मान्यो भवो
भावो धीरः शांतो जगद्गुरुः ॥ ९८ ॥ अंतर्यामीश्वरो
दिव्यो ७६० दैवज्ञो देवता*गुरुः ॥ क्षीराब्धिशयनो धाता

पा०—* देवसंस्तुतः ।

लक्ष्मीवाँल्लक्ष्मणाग्रजः ॥ ९९ ॥ धात्रीपतिरमेयात्मा चंद्र
शेखरपूजितः ॥ लोकसाक्षी ७७० जगच्चक्षुः पुण्यचारित्र
कीर्तनः ॥१००॥ कोटिमन्मथसौंदर्यो जगन्मोहनविग्रहः ॥
मंदस्मिततमो गोपो गोपिकापरिवेष्टितः ॥ १ ॥ फुल्लारविं
दनयनश्चाणूरांध्रनिषूदनः ॥ इंदीवरदलश्यामो ७८० बर्हि
बर्हावतंसकः ॥ २ ॥ मुरलीनिनदाल्हादो दिव्य*माल्यां
बराश्रयः ॥ सुकपोलयुगः सुभ्रूयुगलः सुललाटकः ॥ ३ ॥
कंबुग्रीवो विशालाक्षो लक्ष्मीवाञ्छुभलक्षणः ॥ ७९० ॥
पीनवक्षाश्चतुर्बाहुश्चतुर्मूर्तिस्त्रिविक्रमः ॥ ४ ॥ कलंकरहितः
शुद्धो दुष्टशत्रुनिबर्हणः ॥ किरीटकुंडलधरः कटकांगद

पा०—*दिव्यमाल्यांबरावृतः ।

मंडितः ॥ ५ ॥ मुद्रिकाभरणोपेतः ८०० कटिसूत्रविराजितः ॥मंञ्जीररंजितपदः सर्वाभरणभूषितः ॥ ६ ॥ विन्यस्तपादयुगलो दिव्यमंगलविग्रहः ॥ गोपिकानयनानंदः पूर्णचंद्रनिभाननः ॥ ७ ॥ समस्तजगदानंदः सुंदरो लोकनंदनः ८१०॥ यमुनातीरसंचारी राधामन्मथवैभवः ॥ ८ ॥ गोपनारीप्रियो दांतो गोपीवस्त्रापहारकः ॥ शृंगारमूर्तिः श्रीधामातारको मूलकारणम् ॥ ९ ॥ सृष्टिसंरक्षणोपायः ८२० क्रूरासुरविभंजनः ॥ नरकासुरहारी च मुरारिर्वैरिमर्दनः ॥१०॥ आदितेयप्रियो दैत्यभीकरश्चेंदुशेखरः ॥ जरासंधकुलध्वंसी कंसारातिः सुविक्रमः ८३० ॥ ११ ॥ पुण्यश्लोकः कीर्तनी

---

पा०—* यदुशेखरः ।

यो यादवेंद्रो जगन्नुतः ॥ रुक्मिणीरमणः सत्यभामाजांबव
तीप्रियः ॥ १२ ॥ मित्रविंदानाग्नजितीलक्ष्मणासमुपासितः
सुधाकरकुलेजातोऽनंतप्रबलविक्रमः ॥ १३ ॥ सर्वसौभाग्य
संपन्नो ८४० द्वारकायाम्*उपस्थितः ॥ भद्रासूर्यसुतानाथो
लीलामानुषविग्रहः ॥ १४ ॥ सहस्रषोडशस्त्रीशो भोगमो
क्षैकदायकः ॥ वेदांतवेद्यः संवेद्यो वैद्यब्रह्मांडनायकः॥१५॥
गोवर्धनधरो नाथः८५०सर्वजीवदयापरः ॥ मूर्तिमान्सर्वभूता
त्मा आर्तत्राणपरायणः॥१६॥ सर्वज्ञः सर्वसुलभः सर्वशास्त्रवि
शारदः॥षड्गुणैश्वर्यसंपन्नः पूर्णकामोधुरंधरः ८६०॥१७॥म
हानुभावः कैवल्यदायको लोकनायकः॥आदिमध्यांतरहितः

पा०—* द्वारकापट्टनेस्थितः ।

शुद्धसात्त्विकविग्रहः ॥१८॥ असमानः समस्तात्मा शरणागत
वत्सलः ॥ उत्पत्तिस्थितिसंहारकारणं सर्वकारणम् ८७०
॥१९॥ गंभीरः सर्वभावज्ञः सच्चिदानंदविग्रहः ॥ विष्वक्सेनः स
त्यसंधः सत्यवान्सत्यविक्रमः ॥१२०॥ सत्यव्रतः सत्यसंज्ञः स
र्वधर्मपरायणः ८८०॥ आपन्नार्तिप्रशमनो द्रौपदीमानरक्षकः
॥ २१ ॥ कन्दर्पजनकः प्राज्ञो जगन्नाटकवैभवः ॥ भक्तिव
श्यो गुणातीतः सर्वैश्वर्यप्रदायकः ॥ २२ ॥ दमघोषसुतद्वेषी
बाणबाहुविखंडनः ८९० ॥ भीष्मभक्तिप्रदो दिव्यः कौरवा
न्वयनाशनः ॥२३॥ कौंतेयप्रियबन्धुश्च पार्थस्यंदनसारथिः ॥
नारसिंहो महावीरः स्तंभजातो महाबलः ॥२४॥ प्रह्लादवरदः
९०० सत्यो देवपूज्यो ऽभयंकरः ॥ उपेंद्र इंद्रावरजो वामनोब

लिबंधनः॥२५॥गजेंद्रवरदः स्वामी सर्वदेवनमस्कृतः९१०॥
शेषपर्यंकशयनो वैनतेयरथो जयी॥२६॥अव्याहतबलैश्वर्य
संपन्नः पूर्णमानसः॥योगेश्वरेश्वरः साक्षी क्षेत्रज्ञो ज्ञानदायकः
॥२७॥ योगिहृत्पंकजावासो९२०योगमायासमन्वितः॥नाद
बिंदुकलातीतश्चतुर्वर्गफलप्रदः॥२८॥ सुषुम्नामार्गसंचारी देह
स्यांतरसंस्थितः ॥ देहेंद्रियमनःप्राणसाक्षी चेतःप्रसादकः
॥२९॥सूक्ष्मःसर्वगतो देही९३०ज्ञानदर्पणगोचरः॥तत्त्वत्रया
त्मकोऽव्यक्तः कुंडलीसमुपाश्रितः॥१३०॥ब्रह्मण्यः सर्वधर्मज्ञः
शांतो दांतो गतक्लमः॥ श्रीनिवासः९४०सदानंदी विश्वमूर्ति
र्महाप्रभुः ॥ ३१ ॥ सहस्रशीर्षा पुरुषः सहस्राक्षः सह
स्रपात् ॥ समस्तभुवनाधारः समस्तप्राणरक्षकः ॥ ३२ ॥

समस्तसर्वभावज्ञो १५० गोपिकाप्राणवल्लभः ॥ नित्यो
त्सवो नित्यसौख्यो नित्यश्रीर्नित्यमंगलः ॥ ३३ ॥ व्यूहा
र्चितो जगन्नाथः श्रीवैकुंठपुराधिपः ॥ पूर्णानंदघनीभूतो गोप
वेषधरो १६० हरिः ॥ ३४ ॥ कलापकुसुमश्यामः कोमलः शां
तविग्रहः ॥ गोपांगनावृतोऽनंतो वृंदावनसमाश्रयः ॥ ३५ ॥ वेणु
वादरतः श्रेष्ठो देवानां हितकारकः १७० ॥ बालक्रीडासमास
क्तो नवनीतस्य तस्करः ॥ ३६ ॥ गोपालकामिनीजारश्चौरजा
रशिखामणिः ॥ परज्योतिः पराकाशः परावासः परिस्फुटः
॥ ३७ ॥ अष्टादशाक्षरो मंत्रो* १८० व्यापको लोकपावनः ॥
सप्तकोटिमहामंत्रशेखरो देवशेखरः ॥ ३८ ॥ विज्ञानं ज्ञान
संधानस्तेजोराशिर्जगत्पतिः ॥ भक्तलोकप्रसन्नात्मा भक्तमं

पा०—* मन्त्रव्यापकः ।

दाराविग्रहः ९९० ॥ ३९ ॥ भक्तदारिद्र्यदमनो भक्तानां प्री
तिदायकः ॥ भक्ताधीनमनाः पूज्यो भक्तलोकशिवंकरः
॥ १४० ॥ भक्ताभीष्टप्रदः सर्वभक्ताघौघनिकृंतनः ॥ अपा
रकरुणासिंधुर्भगवान्भक्ततत्परः १००० ॥ १४१ ॥ इतिश्री
राधिकानाथसहस्रनामकीर्तितम् ॥ स्मरणात्पापराशीनां खं
डनं मृत्युनाशनं॥१॥वैष्णवानां प्रियकरं महारोगनिवारणं॥
ब्रह्महत्या सुरापानं परस्त्रीगमनं तथा ॥२॥ परद्रव्यापहरणं प
रद्वेषसमन्वितं॥मानसं वाचिकं कायं यत्पापं पापसंभवं ॥३॥
सहस्रनामपठनात्सर्वं नश्यति तत्क्षणात्॥ महादारिद्र्ययुक्तो
यो वैष्णवो विष्णुभक्तिमान् ॥४॥ कार्तिक्यां संपठेद्रात्रौ शत
मष्टोत्तरं क्रमात् ॥पीतांबरधरो धीमान्सुगंधिपुष्पचंदनैः॥५॥

पुस्तकं पूजयित्वा तु नैवेद्यादिभिरेव च ॥ राधाध्यानांकिता
धीरो वनमालाविभूषितः॥६॥शतमष्टोत्तरं देवि पठेन्नामसहस्र
कम् ॥ चैत्रशुक्ले च कृष्णे च कुहूसंक्रांतिवासरे ॥ ७॥ पठित
व्यं प्रयत्नेन त्रैलोक्यं मोहयेत्क्षणात् ॥तुलसीमालया युक्तो वै
ष्णवो भक्तितत्परः॥८॥ रविवारे च शुक्रेच द्वादश्यां श्राद्धवा
सरे ॥ ब्राह्मणं पूजयित्वा च भोजयित्वा विधानतः॥९॥पठेन्ना
मसहस्रं च ततः सिद्धिः प्रजायते॥महानिशायां सततं वैष्णवो
यः पठेत्सदा॥१०॥देशांतरगता लक्ष्मीः समायाति न संशयः
॥त्रैलोक्ये च महादेवी सुंदर्यः काममोहिताः॥११॥मुग्धाः स्व
यं समायांति वैष्णवं च भजंति ताः॥११॥ रोगी रोगात्प्रमुच्येत

पा०—१ महादेव्यः ।

त बद्धो मुच्यते बंधनात् ॥१२॥ गुर्विणी जनयेत्पुत्रं कन्या विंदति सत्पतिम्॥राजानो वश्यतां यांति किं पुनः क्षुद्रमानवाः ॥१३॥सहस्रनामश्रवणात्पठनात्पूजनात्प्रिये॥धारणात्सर्वमाप्नोति वैष्णवो नात्र संशयः ॥१४॥वंशीवटे चान्यवटे तथा पिप्पलकेथवा॥ कदंबपादपतले गोपालमूर्तिसन्निधौ ॥१५॥ यः पठेद्वैष्णवो नित्यं स याति हरिमंदिरं ॥कृष्णेनोक्तं राधिकायै मयि प्रोक्तं तया शिवे ॥१६॥ नारदाय मया प्रोक्तं नारदेन प्रकाशितं ॥ मया त्वयि वरारोहे प्रोक्तमेतत्सुदुर्लभम् ॥१७॥ गोपनीयं प्रयत्नेन न प्रकाश्यं कथंचन ॥ शठाय पापिने चैव लंपटाय विशेषतः ॥१८॥न दातव्यं नदातव्यं नदातव्यं कदाचन॥देयं शिष्याय शांताय विष्णुभक्तिरताय च॥१९॥ गोदा

नब्रह्मंयज्ञादेर्वाजपेयशतस्य च ॥अश्वमेधसहस्रस्य फलं पाठे भवेद्ध्रुवम् ॥ २० ॥ मोहनं स्तंभनं चैव मारणोच्चाटनादि कम् ॥ यद्यद्वाञ्छति चित्तेन तत्तत्प्राप्नोति वैष्णवः ॥२१ ॥ एकादश्यां नरः स्नात्वा सुगंधिद्रव्यतैलकैः ॥ आहारं ब्राह्मणे दत्त्वा दक्षिणां स्वर्णभूषणम् ॥ २२ ॥ तत आरंभकर्ताऽस्य[2] सर्वं प्राप्नोति मानवः॥शतावृत्तं सहस्रं च यः पठेद्वैष्णवो जनः॥२३॥श्रीवृंदावनचंद्रस्य प्रसादात्सर्वमाप्नुयात्॥यद्गृहे पुस्तकं देवि पूजितं चैव तिष्ठति ॥ २४ ॥ न मारी न च दुर्भिक्षं नोपसर्गभयं क्वचित् ॥ सर्पादिभूतयक्षाद्या नश्यंति नात्र संशयः॥२५॥श्रीगोपालो महादेवि वसेत्तस्य गृहे सदा॥

---

पा०— १ ब्रह्मयज्ञस्य । २ असौ ।

गृहे यत्र सहस्रं च नाम्नां तिष्ठति पूजितम् ॥२६॥ॐतत्सदि
तिश्रीसंमोहनतंत्रे पार्वतीश्वरसंवादे श्रीगोपालसहस्रनामस्तो
त्रं संपूर्णम् ॥ श्रीगोपालकृष्णार्पणमस्तु ॥ उपोद्घातश्लो
का: २३ मूलसहस्रनामश्लोका: १४१ फलश्रुति
श्लोका: २६ संकलिता: श्लोका: १९० ॥ छ ॥
अथ गोपालस्तवराजस्तोत्रम् ॥ ॐअस्यश्रीगोपालस्तोत्र
मंत्रस्य ॥ नारद ऋषि: ॥ अनुष्टुप्छंद: ॥ श्रीकृष्ण: परमा
त्मा देवता ॥ श्रीकृष्णप्रीत्यर्थे जपे विनियोग: ॥ ॥ अथ
ध्यानं ॥ सजलजलदनीलं दर्शितोदारशीलं करतलधृतशैल
वेणुवाद्ये रसालं ॥ व्रजजनकुलपालं कामिनीकेलिलोलं तरु-
णतुलसिमालं नौमि गोपालबालं ॥ १ ॥ ॥ नारद उवा-

च ॥ नवीननीरदश्यामं नीलेंदीवरलोचनं ॥ बल्लवीनंदनं वंदे कृष्णं गोपालरूपिणं ॥ २ ॥ स्फुरद्बर्हदलोद्बद्धनीलकुंचितमूर्धजं ॥ कदंबकुसुमोद्भासिवनमालाविभूषितं ॥ ३ ॥ गंडमंडलसंसर्गिचलत्कांचनकुंडलं ॥ स्थूलमुक्ताफलोदारहारोद्द्योतितवक्षसं ॥४॥ हेमांगदतुलाकोटिकिरीटोज्ज्वलविग्रहं ॥ मंदमारुतसंक्षोभिवलितांबरसंचयं ॥ ५ ॥ रुचिरौष्ठपुटन्यस्तवंशीमधुरनिःस्वनैः ॥ लसद्गोपालिकाचेतो मोहयंतं मुहुर्मुहुः ॥ ६ ॥ बल्लवीवदनांभोजमधुपानमधुव्रतं ॥ क्षोभयंतं मनस्तासां सस्मेरापांगवीक्षणैः ॥ ७ ॥ यौवनोद्भिन्नदेहाभिः संसक्ताभिः परस्परं ॥ विचित्रांबरभूषाभिर्गोपनारीभिरावृतं ॥ ८ ॥ प्रभिन्नांजनकालिंदीजलकेलिकलो

त्सुकं॥योधयंतं क्वचिद्गोपान् व्याहरंतं गवां गणं॥९॥कालिंदी
जलसंसर्गिशीतलानिलकंपिते ॥ कदंबपादपच्छाये स्थितं
वृंदावने क्वचित् ॥ १० ॥ रत्नभूधरसंलग्नरत्नासनपरिग्रहं॥
कल्पपादपमध्यस्थं हेममंडपिकागतं ॥ ११ ॥ वसंतकुसु
मामोदसुरभीकृतदिङ्मुखे ॥ गोवर्धनगिरौ रम्ये स्थितं रा-
सरसोत्सुकं ॥१२॥ सव्यहस्ततले न्यस्तगिरिवर्यातपत्रकं॥
खंडिताखंडलोन्मुक्तामुक्तसारघनाघनं ॥ १३ ॥ वेणुवाद्य
महोल्लासकृतहुंकारनिःस्वनैः ॥ सवत्सैरुन्मुखैः शश्वद्गोकुलै-
रभिवीक्षितं ॥ १२ ॥ कृष्णमेवानुगायद्भिस्तच्चेष्टावशवर्ति
भिः॥ दंडपाशोद्यतकरैर्गोपालैरुपशोभितं॥१५॥नारदाद्यैर्मु
निश्रेष्ठैर्वेदवेदांगपारगैः॥ प्रीतिसुस्निग्धया वाचा स्तूयमानं

परात्परं ॥ १६ ॥ य एवं चिंतयेद्देवं भक्त्या संस्तौति मानवः ॥ त्रिसंध्यं तस्य तुष्टोसौ ददाति वरमीप्सितम् ॥१७॥ राजवल्लभतामेति भवेत्सर्वजनप्रियः ॥ अचलां श्रियमाप्नोति स वाग्मी जायते ध्रुवं ॥ १८ ॥ इति श्रीगौतमीयतंत्रे गोपालचूडामणिस्तवराजः संपूर्णः ॥

## ॥ अथ महालक्ष्म्यष्टकप्रारम्भः ॥

श्रीगणेशाय नमः ॥ ॥ इन्द्र उवाच ॥ ॥ नमस्तेस्तु महा माये श्रीपीठे सुरपूजिते ॥ शंखचक्रगदाहस्ते महालक्ष्मि नमोस्तुते ॥ १ ॥ नमस्ते गरुडारूढे कोलासुरभयंकरि ॥ सर्वपापहरे देवि महालक्ष्मि नमोस्तुते ॥ २ ॥ सर्वज्ञे सर्ववर

दे सर्वदुष्टभयंकरि ॥ सर्वपापहरे देवि महालक्ष्मि नमोस्तुते ॥३॥ सिद्धिबुद्धिप्रदे देवि भुक्तिमुक्तिप्रदायिनी॥मंत्रमूर्त्ते सदा देवि महालक्ष्मि नमोस्तुते ॥ ४ ॥ आद्यंतरहिते देवि आद्यशक्तिमहेश्वरि ॥ योगजे योगसंभूते महालक्ष्मि नमोस्तुते ॥५॥ स्थूलसूक्ष्मे महारौद्रे महाशक्ति महोदरे ॥ महापापहरे देवि महालक्ष्मि नमोस्तुते ॥ ६ ॥ पद्मासनास्थिते देवि परब्रह्मस्वरूपिणि ॥ परमेशि जगन्मातर्महालक्ष्मि नमोस्तुते ॥ ७ ॥ श्वेतांबरधरे देवि नानालंकारभूषणे ॥ जगत्स्थिते जगन्मातर्महालक्ष्मि नमोस्तुते ॥८॥ महालक्ष्म्यष्टकं स्तोत्रं यः पठेद्भक्तिमान्नरः॥ सर्वसिद्धिमवाप्नोति राज्यं प्राप्नोति सर्वदा ॥ ९ ॥ एककाले पठेन्नित्यं महापापविना

शनम् ॥ द्विकालं च पठेन्नित्यं धनधान्यसमान्वित ः ॥१०॥ त्रिकालं यः पठेन्नित्यं महाशत्रुविनाशनम् ॥ महालक्ष्मी र्भवेन्नित्यं प्रसन्ना वरदा शुभा ॥ ११ ॥ ॥ इतींद्रकृतो महालक्ष्म्यष्टकस्तवः संपूर्णः ॥

श्रीगणेशायनमः ॥ अथ राधाष्टोत्तरशतनामप्रारंभः ॥ अथास्याः संप्रवक्ष्यामि नाम्नामष्टोत्तरं शतम् ॥ यस्य संकीर्त्तनादेव श्रीकृष्णं वशयेद्ध्रुवम् ॥ १ ॥ राधिका सुंद री गोपी कृष्णसंगमकारिणी ॥ चंचलाक्षी कुरंगाक्षी गांधर्वी वृषभानुजा ॥ २ ॥ वीणापाणिः स्मितमुखी १० रक्ताशोकलतालया ॥ गोवर्द्धनचरी गोपा गोपीवेशम नोहरा ॥ ३ ॥ चंद्रावलीसपत्नी च दर्पणास्या कलावती॥

कुंपावती सुप्रतीका तरुणी २० हृदयंगमी ॥ ४ ॥ कृष्ण
प्रिया कृष्णसखी विपरीतरतिप्रिया ॥ प्रवीणा सुरतप्रीता
चंद्रास्या चारुविग्रहा ॥ ५ ॥ केकराक्षा हरेःकांता ३० महा
लक्ष्मीः सुकेलिनी ॥ संकेतवटसंस्थानकमनीया च कामिनी
॥६॥वृषभानुसुता राधा किशोरी ललिता लता॥ विद्युद्वल्ली
४० कांचनाभा कुमारी मुग्धवेशिनी ॥ ७ ॥ केशिनी के
शवसखी नवनीतैकविक्रया ॥ षोडशाब्दाकलापूर्णा जारिणी
जारसंगिनी ५० ॥ ८ ॥ हर्षिणी वर्षिणी वीरा धीरा धारा ध
राधृतिः ॥ यौवनस्था वनस्था च मधुरा मधुराकृतिः ६०
॥ ९ ॥ वृषभानुपुरावासा मानलीला विशारदा॥ दानलीला
दानदात्री दंडहस्ता भ्रुवोन्नता ॥१०॥ सुस्तनी मधुरास्या

च बिंबोष्ठी पंचमस्वरा७०॥ संगीतकुशला सेव्या कृष्णवश्य
त्वकारिणी ॥ ११ ॥ तारिणी हारिणी ह्रीला शीला लीला
ललामिका ॥ गोपाली ८० दधिविक्रेत्री प्रौढा
मुग्धा च मध्यका ॥ १२ ॥ स्वाधीनपतिका चोक्ता
खंडिता चाभिसारिका ॥ रसिका रसिनी रस्या ९०
रसशास्त्रैकशेवधिः ॥ १३ ॥ पालिकालालिका लज्जा
लालसा ललनामणिः ॥ बहुरूपा सुरूपा च सुप्रसन्ना महा
मतिः १०० ॥ १४ ॥ मरालगमना मत्ता मंत्रिणी मंत्रना
यिका ॥ मंत्रराजैकसंसेव्या मंत्रराजैकसिद्धिदा ॥ १५ ॥
अष्टादशाक्षरफला अष्टाक्षरनिषेविता १०८ ॥ इत्येत
द्राधिकादेव्या नाम्नामष्टोत्तरं शतम् ॥ १६ ॥ कीर्त्तयेत्प्रात

रुत्थाय कृष्णवश्यत्वसिद्धये ॥ एकैकनामोच्चारेण वशी भवति केशवः ॥ १७ ॥ वदने चैव कंठे च बाह्वोरुरसि चोदरे ॥ पादयोश्च क्रमेणास्तान्न्यसेन्मंत्रोद्भवान्पृथक्॥ १८॥ ॐतत्सदित्यूर्ध्वाम्नाये राधिकाऽष्टाक्षरविधिर्नाम प्रथमपटलः ॥ अथ श्रीराधामहामन्त्रः॥ क्लींश्रींराधिकायै स्वाहा ॥अस्य श्रीराधिकामंत्रस्य अगस्त्यऋषिः जगतीछन्दः श्रीराधिका परमेश्वरी देवता क्लींबीजं स्वाहा शक्तिः क्लींश्रींकीलकम् श्रीकृष्णवश्यार्थे जपे विनियोगः ॥ अगस्त्यऋषये नमः शिरसि ॥ जगतीछंदसे नमः मुखे ॥ राधिकादेवतायै नमः हृदये॥क्लींबीजाय नमः गुह्ये ॥ श्रींस्वाहाशक्तये नमः पादयोः॥ क्लींश्रींकीलकायै नमः सर्वांगेभ्यः॥क्लींअंगुष्ठाभ्यां नमः

श्रीँतर्जनीभ्यांनमः राधिकायै स्वाहा मध्यमाभ्यां नमः क्लीं अनामिकाभ्यां नमः श्रीँकानिष्ठिकाभ्यां नमः राधिकायैस्वाहा करतलकरपृष्ठाभ्यां नमः ॥ क्लींहृदयायनमः श्रीँशिरसेस्वाहा राधिकायैस्वाहा शिखायै वषट् ॥ क्लींकवचाय हुम् श्रीँनेत्रत्रयायवौषट् राधिकायै स्वाहाअस्त्रायफट् ध्यात्वा जपेत् ॥ लक्षमात्रंपुरश्चरणं कलौचतुर्लक्षं जप्त्वा कुशलीभवेत् ॥ इति राधामहामंत्रः ॥

---

इदं पुस्तकं निव्हाणीनिवासिपौराणिकगोपालशर्मपण्डितसकाशादुपलब्धसंप्रदायपुस्तकानुरोधेन खानदेशीयरावेरग्रामनिवासिपरशुरामभट्टतनयगोविन्दशर्मशास्त्रिणा सम्यक्परिशोध्य नूतनक्रमेणां

कयोजनया न्यूनातिरिक्तविषयपर्यावर्तनपूर्वकसमीकरणेन टिप्पणी पाठभेदप्रयोजनेन च सम्यगपूर्वव्यवस्थया परिष्कृतम् ॥

तदेतत्पुस्तकं मुंबय्यां श्रीकृष्णदासात्मजखेमराजेन स्वकीये 'श्रीवेंकटेश्वर' नाम्नि मुद्रणालये मुद्रितम् ।



संवत् १९५० शके १८१५ भा० व० ३

